सिद्धे[1] चास्य रसे चतुर्दशमहाध्यायाभिधेयात्मके
नीतास्ते[3] परमार्थतां ददतु वो लक्ष्मीं क्षणादक्षयाम् ॥

इति श्रीराजानकरामविरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
चतुर्दशोऽध्यायः ॥



१ IO सिद्धेऽभ्यासरसे
BN[1] सिद्धे यस्य रसे
BS[1] सिद्धेशस्य रसे
२. IO महामाध्याभिधे धातुके
३. BN[1] नीतस्ते
४. BN[1] रामकविरचिते
BS[1] रामकण्ठविरचिते

## ॥ अथ पञ्चदशोऽध्यायः ॥

---

एवं त्रयोदशाध्याये स्थूलदृष्ट्या भूतप्रकृतेर्मोक्ष. परमप्राप्तिहेतुत्वेन[1] प्रतिपादितः। चतुर्दशेन तु सूक्ष्मया दृष्ट्या गुणपरमार्थायाः तस्यास्तदतिक्रमेण[2] विशेषतो ब्रह्मभावप्राप्तिरुपदिष्टा[3]। इदानीं भुवनसन्तानभावेन[4] परिणतायास्तस्याः निर्मोक्षप्रतिपादनक्रमेणापुनरावृत्तिपदप्राप्तिं[5] प्रतिपादयितुं **भगवानुवाच**—

ऊर्ध्वमूलमधःशाखमश्वत्थं प्राहुरव्ययम्।
छन्दांसि यस्य पर्णानि यस्तं वेद स वेदवित्॥ १॥

प्रतिपाद्यमानविशेषणसाधर्म्यादश्वत्थवृक्षाध्यवसायेन[6] नानाभुवनसन्तानरूपः संसारप्रपञ्चो विवक्षितः। तम[7]श्वत्थमेवंविधमाहुः, परावरद्रष्टारः कथयन्ति। कीदृशम्? ऊर्ध्वमूलम्[8]; बहुलप्रपञ्चस्यापि भुवनसन्तानस्य केवलभोगभूमिकर्मभूमिभेदेन संग्रहात् द्विप्रकारत्वे[9] सति भोगभूमिरूपो भाग ऊर्ध्वशब्देनोक्तः भोगस्य फलत्वात्, फलस्य च प्राधान्यात्; मूलशब्देन[10] चाविद्यादिक्लेशजालमुक्तम्; सति हि तस्मिन् भोग-

---

१. IO परमाप्ति
२. BN[1] तदतिक्रमक्रमेण
३. IO ब्रह्मप्राप्ति
   BN[1] ब्रह्मभावप्राप्ति
४. IO omits भावेन...वृत्तिपद
५. BS[1] निर्दिष्टप्रति
६. IO वृक्षव्यवसायेन
७. IO तदश्व
८. IO मूलं बहुप्रप
   BN[1] मूलबहुलप्रप-
९. BN[1] प्रकारे
१०. BN[1] शब्दे च

भूम्यात्मना क्षेत्रज्ञान् प्रति प्रकृतिर्विपरिणमति। अन्यच्च कीदृशम् ?[3] तमध शाखम्। अध शब्देन कर्मभूम्यात्मको भाग उच्यते, तेन[4] पुनरावृत्त्यधिकरणत्वादधो-विपर्यत्वेनोक्ता[5] कर्मभूमय एव[6] शाखा। इत्थमध शाखा[7] यस्य[8] त तथाविधम्। यत सत्सु क्लेशेषु शुभाशुभभोगाधिकरणभूतेभ्यो भुवनेभ्य क्षेत्रज्ञाना पुन कर्मभूमौ निपतनमवश्यमेव स्थितम्, यदुक्तम्—"आब्रह्मभुवनाल्लोका पुनरावर्तिनोऽर्जुन" इति। अन्यच्च कीदृशम् ? अव्ययम्। अनन्तत्वात् परमेश्वरमायावभासिताना[10] क्षेत्र-ज्ञाना गमागमानिवृत्ते, तान् प्रति तथास्य परिणमत प्रवाहनित्यत्वेनाविद्यमान-व्ययत्वम्। अन्यच्च कीदृशम् ? यस्य[9] छन्दासि वेदा, पर्णानि पत्राणि। किमुक्त भवति ? वेदसमुद्भवत्वाद्यानि तानि कर्माणि छन्द शब्देनोक्तानि, तान्येव तादृक्-परिणामावधिभूतत्वात् पर्णत्वेनास्याध्यवसितानि। तैमेवविधमेन[11] क्लेशप्रभवत्रयी नियमितकर्मफलभूतभोगाधिकरणात्मक भुवनसन्तानरूपमूर्ध्वमूलत्वादिना सादृश्या-दश्वत्थत्व यो वेद, वेद्यत्वेन वेदकात्[12] स्वरूपाद्व्यतिरिक्त जानाति, स वेदार्थवित्, न तु यस्तस्मिन् ममत्वादिग्रहेण निमग्न[13] इत्यर्थ ॥

---

१ IO क्षेत्रज्ञानां
२ IO ऊलध ऊयध
३. BN¹ omits कीदृशं
४ IO ते पुन
५. All except BN¹ आवृत्त्याधि
६ BS¹ and BS² विपयत्वनोक्त
BN¹ विपर्ययेनोक्त
७. IO omits एव
८ IO शाख
९. IO omits यस्य अर्जुनेति
१० IO and BN¹ मायावसिताना
११ BN तदेवंविधं
१२ BS¹ and BS² वेदकात्स्व-
१३ BS¹ adds माना

ननु किमयमश्वत्थ ऊर्ध्वमूल एव, अध शाख एव च स्यात्, उत रूपान्तर मप्यस्तीत्याशङ्काया तत्प्रतिपादनार्थमाह—

अधश्चोर्ध्वं प्रसृता यस्य शाखा गुणप्रवृद्धा विषयप्रवालाः ।
अधश्च मूलान्यनुसन्ततानि कर्मानुबन्धीनि मनुष्यलोके ॥ २ ॥

यस्य चाश्वत्थस्योक्तेन क्रमेणाध शाखा प्रसृता ऊर्ध्वं च प्रसृता , कुत [1] चशब्दो हेतौ । यस्मादधो मर्त्यलोकशब्देनोक्ताया कर्मभूमौ मूलान्यनुसन्ततानि क्लेशा एव प्रसृता इत्यर्थ , कर्माण्यपि हि क्लेशमूलानि, अत एव तादृशि मूलानि कर्मानुबन्धीनि कर्माणि शुभाशुभा क्रिया अनुबन्ध गमयितु शील येषा तानि तथोक्तानि । भोगभूमिषु हि भोगत्वेन क्लेशा एव यथा विजृम्भन्ते, ततश्च कर्म प्रभवा एव भोगभूमय ऊर्ध्वप्रसृतशाखत्वेनाध्यवसिता , तथा उभयरूपा अप्यस्य शाखा कीदृशा इत्याह— गुणप्रवृद्धा इति । गुणै सत्त्वादिभि सुखाद्यात्मना परिणमद्भि प्रवृद्धा उपचय प्राप्ता । यावान् हि प्रसरस्तासा स सर्वो गुणानुविद्ध एव भोगात्मना कर्मात्मना वा विजृम्भते तेन यथा रसेन शाखा वृक्षस्य प्रवर्धन्ते, एव गुणै कर्मभूमय फलभूमयश्च प्रवर्धन्ते , तदात्मका एव ता इत्यर्थ । तथा विषय प्रवाल , विषया शब्दादयो बुद्धिप्रधानासु भूमिषु अध्यवसिता प्रवालस्थानीया

---

१. IO मप्यस्यास्तीति
२ IO सन्तानि
३ IO भूमिषु भोगभोगत्वेन
४ BN शाखाचेन
५ IO and BN यावन्ति प्र
BS' यावाद्धि प्र
६ BN सर्व
७ BN विजृम्भन्ते
८ BN विषयस्य प्रवा
९ IO अध्यवसिता

पल्लवतुल्या यासां उपरितनीष्वधस्तनीषु सर्वास्वेव हि भूमिषु शुभाशुभविषयत्वेन परिणता गुणा एव पर्यायेण गमागमहेतुत्वमापाद्यमाना क्षेत्रज्ञान्निबध्नन्तीति तात्पर्यम् ॥

तदेवंविधस्योक्तस्य भवस्य वक्ष्यमाणज्ञानाभावादाह—

न रूपमस्येह तथोपलभ्यते नान्तो न चादिर्न च संप्रतिष्ठा ।

अस्य यथाप्रतिपादितस्याश्वत्थस्य तथा तेन प्रकारेण रूपं स्वभावो नोपलभ्यते, तत्त्वतो नैव प्रतिपाद्यते, अन्यथैव ह्ययमचिन्त्येश्वरमायामात्र-निबन्धनतया तत्त्वनिःसाररूपत्वेन स्थितो ज्ञानशून्यैस्त्वाचान्यथैव परमार्थसत्त्वेनावभासमानो ममकारग्रहेण प्राणिनो निबध्नाति, यथास्य स्वरूपं नोपलभ्यते, न च संप्रतिष्ठा, आभ्यन्तराल्पवर्तिनी सम्यक् स्थित्यवस्थापि न लभ्यते । यतो यतो येन येन रूपेणास्य स्थितिः तत्सर्वं परिणामित्वादस्थिरम् ॥

अत एवंविधस्यास्य स्वभावोप्रकाशस्य व्यवधायकस्य छेदोपायमाह—

अश्वत्थमेनं सुविरूढमूलमसङ्गशस्त्रेण शितेन छित्त्वा ॥ ३ ॥
ततः पदं तत्परिमार्गितव्यं यस्मिन् गतो न निवर्तेत भूयः ।

---

१ IO and BN omit this word.
२ IO and BN[1] omit this word
३ BN[1] omits यथा
४. BN[1] प्रतिपद्यते
५ IO ह्यन्यतयैव पर
६. IO omits मम...रूपं नो
७ BN[1] तथास्य
८. IO आद्यन्तराल
BN[1] अभ्यन्तराल
९. All except BN[1] omit यतः
१०. IO स्वभावप्रका-

एवं[1] यथाप्रतिपादितस्वरूपं क्षेत्रज्ञानां[2] क्लेशनिमित्तकर्मानुरूपपरिपाकानुभवाधिकरणभूतभुवनसन्तानात्मकमश्वत्थम्[3], तत्साधर्म्यादश्वत्थेन निरूपितम्; अत एव[4] सुविरूढमूलं सुष्ठु दार्ढ्येन विविधं कृत्वा रूढानि[5] प्ररोहंप्राप्तानि क्लेशा[6] एव मूलानि यस्य स[7] तादृशम्; असङ्गशस्त्रेण ममताग्रहरूपगाढश्लेषत्यागात्मना[8] विवेकपाषाणकषणवशाच्छितेन तीक्ष्णेन कुठारेण छित्वा मूलतो द्विधा कृत्वा[9] ततोऽनन्तरं पुनःपुनः प्रतिपादितस्वरूपं पदं[10] निरुत्तरं धाम मार्गमन्वेषणीयम्। कीदृशम्? यस्मिन् प्राप्ते योगी भूयो न निवर्तते[11] पुनः संसारवर्त्मनि नाविर्भवेत्[12], अकृत्रिमस्वभावविश्रान्तिलक्षणं मोक्षमवाप्नुयात्। यस्मादेतस्मिन्नेव परमकारणावरणहेतौ महति विश्वे यथोक्तेन रूपेण[13] निकृत्ते[14] सति योगी,

तमेव चाद्यं पुरुषं प्रपद्येद्यतः[15] प्रवृत्तिः प्रसृता पुराणी ॥ ४ ॥

यदेतदुक्त[16]व्यवधानविच्छेदाद्योगी प्राप्नुयात् स एव परमः पुरुषः[17] परमकारणं परमात्मा[18]; ततः तस्मिन् पदे[19] प्राप्ते परं पुरुषं प्रपद्येत[20] तत्समापन्नो भवेद्योगी-

---

१. IO एवं
२. IO क्षेत्रज्ञानां क्लेशनिमित्तकर्मानु-
३. BS¹ and BS² सत्तात्मकं
४. BN¹ एवं instead of अत एव
IO अत एव सुविभक्तफलमूलं दार्ढ्येन
५. IO रूपाणि
६. IO क्लेशात एव
७. IO यस्यैतादृशं
८. IO समतान्तग्रहरूपगाढश्लेषत्याग
९. BS² adds कृत्वा
१०. BN² omits पदं
११. BN¹ निवर्तते
१२. IO नाविर्भवति
१३. IO स्वरूपेण
१४. BN¹ निवृत्ते
१५. BN¹ प्रपद्ये यतः
१६. IO उक्तस्य
१७. BS¹ omits पुरुषः
१८. IO omits परमात्मा...सर्वकारण
१९. BS¹ पदं
२०. All except BN¹ प्रपद्ये

त्यर्थ । क त पर पुरुष प्रपद्येत्, यतो यस्मादेकस्मात्सर्वकारणभूतात् पुराणी प्रवहमानत्वाच्चिरन्तनी प्रवृत्ति यथाप्रतिपादितजगत्क्रीडनकनिर्माणात्मिका क्रिया प्रसृता, इत्थमवभासमानत्वात् प्रकर्षेण सृता गता व्यापिनी सवृत्तेत्यर्थ । किमुक्त भवति ? यदैव परपदप्राप्तिलक्षणपरमात्मस्वभावविश्रान्तिरुपजायते, तदैव तदिच्छामात्रैककारणत्व जगद्वैचित्र्याभासस्य योगिन प्रतिपद्यन्ते ॥

अत एव—

निर्मानमोहा जितसङ्गदोषा अध्यात्मनित्या विनिवृत्तकामाः ।
द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैः गच्छन्त्यमूढाः पदमव्ययं तत् ॥५॥

तदव्यय नित्यत्वादपक्षयादिरहितं पद स्वाभाविकात्मलक्षण स्थानम् अमूढा प्रोदितविद्याशक्तित्वात् प्रबुद्धा गच्छन्ति प्राप्नुवन्ति, तादात्म्य लभन्त इत्यर्थ । कीदृशा सन्त ? निर्मानमोहा अनात्मादिष्वात्मादिप्रत्ययलक्षणोऽभिमानमयान्मोहान्निष्क्रान्ता , यतो जितसङ्गदोषा , सङ्ग आसक्ति अनात्मादौ वस्तुन्यात्माभिमानेन गाढनिमग्नचित्तत्वम्, स एव दोष ससारहेतुत्वान्महदैवेद्य जित तिरस्कृतो

---

१ All except BN प्रपद्ये
२ IO भूता
३ IO and BN' प्रवाह
४. BN' omits प्र
५ BN' यदेव परप्राप्ति
६ IO तदेतदिच्छा
७ BN प्रतिपद्येत
IO प्रतियते न तु
८ IO अध्यात्मनिष्ठा
BS' अध्यात्मविद्या
९. BN विमुक्ता
१० IO अपक्षयदोषादिरहितं
BN' अपक्षयादिदोषरहित
११ BN' प्रोत्पादित
१२ IO अनात्मादिप्रत्य
१३. IO क्षणादिमयात्
BN' क्षणोऽभिमान
१४. BS' and BS' सङ्ग
१५ IO and BN' अगम्य

यैस्ते तथाविधा । कथंभूतः[1] स ज्ञेय इति हेतुगर्भं विशेषणमाह—अध्यात्मनित्या[2] इति। अध्यात्ममात्मनि[3] पारमार्थिके स्वस्वभावे[4] नित्याः[5] सदा तदेकनिष्ठा इत्यर्थः। कथमध्यात्मनित्यत्वं स्यादिति पूर्ववद्विशेषणं[6] विनिवृत्तकामा इति। काम्यन्त इति कामाः, ऐहिकामुष्मिका इष्टाः शब्दादयो भोगा विनिवृत्तास्तत्त्वज्ञानाभ्यासात् विच्छिन्नास्ते येषां ते[7] तथाविधाः। कामा हि बाह्यविषयान्[8] प्रति चित्तमाकर्षयन्तो[9]ऽध्यात्मनिष्ठता विघ्नयन्ति। अतो विनिवृत्तकामा[10] अध्यात्मनित्या[11] इत्युक्तम्। विनिवृत्तकामत्वं[12] च[13] कथं स्यादिति पूर्ववद्विशेषणमाह—"द्वन्द्वैर्विमुक्ताः सुखदुःखसंज्ञैः" इति[14]। द्वन्द्वैः क्षुत्तृष्णाशीतोष्णजरामरणादिभिः[15]। तथा एतद्विपरीतैः[16] स्नेहाह्लादादिभिरनित्यशरीराद्यहङ्कारनिबन्धनैः क्लेशैः सर्वैरेव सुखदुःखात्मकत्वाद्यभिमानैर्[17]विमुक्ताः परिवर्जिताः; ते हि तथाविधा निवृत्तकामा भवन्ति। तदयमत्र क्रमो विवक्षितः—ये[18] भगवदनुग्रहाविर्भूतविवेकजज्ञानत्वात् प्रबुद्धयोगिनो हेयोपादेयविवेकक्षमबुद्धयो जायन्ते, ते सुखाद्यात्मकत्वेन संवेद्यत्वमापन्नान्[19] सर्वान् प्रकृतान् भावान् हेयत्वेनात्मतत्त्वं[20] च यथाप्रतिपादितस्वरूपमुपेयत्वेन[21]

---

१. IO omits कथं
२. IO निष्ठा इति
BS¹ विद्या इति
३. IO अध्यात्मनि
४. IO and BN¹ omit स्व
५. IO निष्ठा·
६. IO and BN¹ add इति
७. IO एते
८. BN¹ and BS² बाह्यान्
९. IO आकर्षन्ते
१०. IO निर्वृत्तकामा.
११. IO निष्ठा.
१२. IO omits विनिवृत्तकामत्वं
१३. BN¹ omits च
१४. IO omits इति द्वन्द्वैः
१५. IO जरामरणशीतोष्णादि
१६. BN¹ तथा तथा तद्विप.
१७. BN¹ अभिधानैः
१८. IO and BN¹ omit ये
१९. BN¹ आपन्नाः सर्वान् प्राकृतान्
२०. BS¹ आत्मतत्त्वं च
२१. BN¹ and IO उपादेयत्वेन

निश्छिन्वन्तो द्वन्द्वात्मकैः क्लेशैर्विमुच्यन्ते, तेभ्यो निवृत्ताश्च तद्विधधर्मिणि[1] सहजनित्यानन्दमये स्वात्मन्येव नित्यावहिता भवन्ति; ततश्च बाह्येषु भावेषु प्रतिपादितोपपत्त्या शास्त्रीयकर्मापरित्यागे[2] सति स्पृश्यमानेष्वपि शरज्जलदपटले-ष्विव सौधवो नि सङ्गा भवन्ति; ततश्च नि सङ्गत्वात् निर्मलैः विच्छिन्ना विपर्यय-प्रत्यया सन्त. परमात्मन्येव परमार्थसत्ये सुप्रतिष्ठाहंप्रतीतय. परमं पदमाप्नुवन्ति ॥

कीदृशं तत् ?

न तद्भासयते सूर्यो न शशाङ्को न पावकः ।
यद्गत्वा न निवर्तन्ते तद्धाम परमं मम ॥ ६ ॥

तत्पद सूर्यादयो न भासयन्ति । तेषा हि प्रकाशं कारणान्तरलब्ध-जन्मकं चेतनाचेतनभावाभिव्यञ्जकत्वेन प्रकाशकमनन्यप्रकाश्यसंवित्प्रकाशात्मना परमशब्दप्रतिपादितेन स्वस्वभावेन परमात्मेच्छामात्रेण भासयन् प्रकाशयति; अत सूर्यादीनां कथं तत्पदं प्रकाश्यं स्यात् ? अथ तदेवं मम यथोक्तस्वरूपस्य परमकारणस्य परमेश्वरस्य धाम स्थानं यत्प्राप्य यत् समापद्य योगिनो न निवर्तन्ते ; न पुन संसारभूमिमन्यजीववदवतरन्ति ॥

---

१. BN¹ धर्माणि
२ IO त्यागेनातिस्पृश्य
३ All except IO वायव.
४. IO निर्मलविच्छिन्न-
५. IO and BS¹ स्वप्रतिष्ठा
६. BN¹ कारणालब्ध
७. IO परमात्मनि
८. IO भासयति
BS¹ notes as an alternative reading भावयन्
९ IO कार्ये
१०. IO तदैव
११ BN¹ स्वस्वरूप
१२. BN¹ भूमिं नानाजीववत्

ननु स्वेच्छामात्रेण सर्वभावप्रकाशके अनन्यप्रकाश्यचित्प्रकाशैकस्वभावे परमात्मन्येवैकस्मिंस्तत्त्वे परमार्थसत्त्वेन व्यवस्थिते प्रतिशरीरं ज्ञत्वादिधर्मयोगिनोऽन्योन्यभिन्ना क इमे जीवानामयथेच्छमिन्द्रियवर्गं स्वस्वविषये प्रवृत्तिनिवृत्ती लम्भयन्तीति संशयानान्प्रति जीवविवेकार्थमाह—

ममैवांशो जीवलोके जीवभूतः सनातनः ।
मनःषष्ठानीन्द्रियाणि प्रकृतिस्थानि कर्षति ॥ ७ ॥

य एव जीवो नाम पदार्थः प्रकृतिस्थानि शब्दादिभावेन परिणतायां यथोक्तस्वरूपायां प्रकृतौ स्थितानि तदेकालम्बनत्वात् तदाश्रितानि प्राधान्याच्छ्रोत्रादिबुद्धीन्द्रियविवक्षया पञ्चेन्द्रियाणि मनसा प्रवृत्तिनिवृत्तिसाधनभूतेनान्तःकरणेन षष्ठेन सहितानि कर्षति, उपादेये स्वविषये युञ्जानो हेयाच्च ततो निवर्तयन्नाक्षिपति विक्षिपति च, स जीवलोके जगति ममैवांशः, स च प्रतिपादितस्वरूपस्य परमकारणस्यांशो भाग इव सनातनो नित्यो जीवभूतो मदिच्छावशादन्योन्यभिन्नजीवरूपतां प्राप्तः । किमुक्तं भवति? जीवपरमात्मनोर्नास्ति मनागपि वास्तवो भेदः । एवकारेण जीवस्य चिन्मात्रस्वरूपातिरिक्तवस्त्वन्तरैः संपर्कसंभावनाभावोऽवधारितः । तेन परमार्थतः परमकारणादभिन्नस्यापि प्रतिक्षेत्रं विभक्तेन्द्रिय

१ IO सर्ववस्तुप्रकाशके
२ All except IO ज्ञत्वादि
३ All except BS[3] add इव
४ IO परिणतया
५ IO भेदकालम्ब
६ IO omits this word
७ IO कर्षयन्ति
८ IO निक्षिपति
९ BN[1] एव
१० BN[1] omits भिन्न
११. BN[1] असंपर्क
१२. BN[1] कारणभिन्न

वैर्गापकर्षत्यादिना नानात्वप्रतीतिरचिन्त्यमन्मायाशक्तिजनिता नास्य वास्तवी, सा हि मायाशक्ति तत्त्वज्ञानावसरनिमाय्यनि सारस्वरूपा सपति सर्वभावमेदविभ्रमोद्भावनेनेत्य व्यामोहयतीति, "दैवी ह्येषा गुणमयी मम माया दुरत्यया" इत्यादिना प्रागेव प्रतिपादिताद्भुतस्वरूपा, ततश्चाकाशस्य नित्यनिर्मलनिर्विभागानन्तमहिम्नोऽपि घटाद्यवच्छेदकवस्तुवशाद्यथाशवत्त्वपरिकल्पना, तथा परमात्मनोऽपि शरीराद्यवच्छेदकवस्तुवशात् जीवरूपाशवत्त्वपरिकल्पनेयम्, न तु तस्योक्तस्वरूपस्य वस्तुतो भागा सम्भवन्ति। योऽपि प्रदीप्तहुताशराशिस्फुलिङ्ग निचयोपमानप्रतिपादनव्यवहार परमात्मजीवात्मनोरागमेषु श्रूयते, सोऽप्यौपचारिक एव, न वास्तव, यतो ब्रह्मविद एकमेव तत्त्व परमार्थसद्ब्रह्मसहायानेकमिव चकास्तीत्याचक्षते, तथा च कश्चिदीश्वरोऽव्याकृतप्राणविराड्भूतेन्द्रियोर्मिभि रा मनृत्यन्निवाभाति तस्मै ब्रह्मोऽब्धये नम इत्याह ॥

---

१ IO वर्गकर्षत्वादिना
२ BN[1] अस्य न वास्तवी
IO omits अस्य
३ IO निर्माणस्वरूप
४ BN[1] omits भेद
५ BN[1] omits मम माया दुरत्यया
६ IO ततश्च प्रकाशस्य
७ BN[1] निर्मलविभाग
८. IO महिम्नो हि
९. IO omits द्यवच्छे शरीरा
१०. IO जीवरूपस्य शवत्त्व परिकल्पनीयम्
११. IO वस्तुनो
१२ IO and BN आगमे
१३ BN[1] एक एव
१४ IO संसायामनेकं वा
BN[1] सहायामनेकमिव
१५. IO कश्चियोगीश्वर
१६. IO omits रा
१७. IO ब्रह्मर्षये

ननु ततस्ततः शरीराद्[1]उपात्तशुभाशुभकर्मणोपचितवासनाधि[2]वासित एव जीवः शरीरान्तरं प्रतिपद्यमानः संसारपरम्परापरिवर्तनमनुभवन्[3] कथं न वस्तुतोऽन्यो भिन्नो भवेदिति भेदभ्रान्तिमपाकर्तुमाह—

शरीरं यदवाप्नोति यच्चाप्युत्क्रामतीश्वरः ।
गृहीत्वैतानि संयाति वायुर्गन्धानिवाशयात् ॥ ८ ॥

एवं मदंशत्वाद्वस्तुतो[5] मदभिन्नो जीवपदार्थो यच्छरीरमवाप्नोति केनचिन्नवेन शरीरेण सम्बध्यमानत्वात्[6] जातव्यपदेशं लभते इत्यर्थः; तथा यच्चाप्यु[4]त्क्रामति तत्कर्मविपाक[7]क्रमक्षये केनचिच्छरीरेण वियुज्यमानत्वात्[8] उत्क्रामन् तद्व्यपदेशं लभते । तदयमीश्वर स्वतन्त्रस्वरूपमात्मप्रतिष्ठः परमात्मैव सन् एतानि सूक्ष्मरूपाणीन्द्रियाणि गृहीत्वाधिष्ठेयत्वेन स्वीकृत्य संयाति, देहात् देहान्तरगन्तृत्वव्यपदेशभाग् भवति; न पुनर्नित्यनिर्विभागव्यापकचिन्मात्रै[9]कस्वरूपस्यास्य देहाद्देहा[10]न्तरगमनलक्षणं संयानं जन्ममरणशब्दवाच्यं वस्तुतः संभवति। इदमत्र तात्पर्यम्—पारमार्थिकस्वरूपप्रत्यवमर्शाभावमात्रात् लब्धजन्मनो निजमायाशक्त्युद्भावितै[11]तावच्छेदविविधशरीरसम्बन्धाज्जीवनानात्वमिवावभासयत्ययमीश्वरः। तेन यथा

---

१. IO शरीरोपात्त
२ IO omits वासनाधि
३. IO परस्परापरिवर्तमानस्तव कथं
४. IO and BN' यच्चापि
५. IO वस्तुनो
६. IO omits संबध्य...शरीरेण
७. BN' परिपाक
८. IO adds युज्यमानत्वात्
९. IO omits एक
१०. IO and BN' देशाद्देशान्तर
११. IO उद्भावितत्तावच्छेदहेतुविविध
" BN' उद्भावितात्तत्तदवच्छेद

घटकुसूलगृहाद्यवच्छेदकवस्तुसम्बन्धादेकमेव निर्विभागमाकाशं घटाकाशं कुसूलाकाशमित्यादिभेदव्यपदेशमतत्त्वविदः प्रतिपद्यन्ते, तथैवायमीश्वरः स्वरूपप्रतिष्ठ एव सन् नानाकार्यकारणसम्बन्धात् नानात्वमिव प्रतिपद्यते[4]। तत्सम्बन्धेऽपि सति यथैव विशुद्धसंविन्मयस्वरूपमात्रप्रतिष्ठ एव तथोपमानेन प्रकटयति, कुतश्चिदाशयात् कमलाकरादेर्यथास्पर्शमात्रस्वभावो वायुर्गन्धान् कमलकुवलयादिमकरन्दामोदान् सूक्ष्मरूपान् स्वीकृत्य कुमुदाकरादिकमाशयान्तरं संयाति, तथैवायमिन्द्रियादीनि गृहीत्वा देहाद्देहान्तरं चिन्मात्रस्वरूपप्रतिष्ठ एव संयातीव। किमनेनोक्तं भवति? यथा तत्तदाशयगतगन्धैः परमाणुपरिग्रहेऽपि स्पर्शमात्रगुणात् स्वरूपादप्रच्यवमानो गन्धवत्तां नावपद्यते पवनः, अथ च[13] तत्सम्बन्धात् कमलसुरभिः कुमुदमकरन्दसुगन्धिरिति भिन्नव्यपदेशभाग्भवति, तथायमात्मा निरावरणानन्तनिर्विभागचिदेकस्वभावोऽपि मायोद्भावितदेहादिपदार्थसम्बन्धात् नानाव्यपदेशं भजते, न तु वस्तुतोऽस्य भेदः। संभवति चायमुपमानोपमेयभावो विवक्षितः॥

---

१ IO omits घटाकाशम्
२. IO एवमर्थाकार्य
३ BN करण
४. IO प्रतिपद्यन्ते
५. IO and BN यथोप
६ BN स्पन्दमात्र
७. IO omits कमल
८ IO कुमुदादिकमाश
BS and BS' कुमुदादिकरादि
९ IO संयात्येव
१० BN तत्तदाकाशगत
११ IO omits गन्ध
१२ BN गुणान्
१३ BN omits च
१४ BN सुरभिरिति

यद्युत्क्रान्तिसम्बन्धेऽपि स्वरूपाप्रच्युतिरस्त्येवेति ज्ञात्वा पुर्यष्टकगमनविचारमभि-व्यञ्जकान्तःकरणधर्मयोगिशरीरादिसम्बन्धेऽपि धर्मैक्यं स्वरूपानतिरिक्तं गम्या-त्मन प्रतिपाद्य इदानीं तदन्तरवर्तिभोगैकक्षयित्वाभिव्यञ्जकसामर्थ्यमप्यस्य, तां प्रतिपादयन्नाह—

श्रोत्रं चक्षुः स्पर्शनं च रसनं घ्राणमेव च ।
अधिष्ठाय मनश्चायं विषयानुपसेवते ॥ ९ ॥

"क्षेत्रज्ञं चापि मां विद्धि सर्वक्षेत्रेषु भारत" इत्यादिना सर्वक्षेत्रस्थत्वे-नाप्येक एवात्मा नानाक्षेत्रवर्तिविभिन्नविषयाधिष्ठातृभावेन नानात्वमिव प्रतिपद्यमानो विषयान् शब्दादीन् सुखादिहेतुत्वेनोपसेवते ; तत्र उपलब्धृत्वमात्मनो विभक्तभावापत्ति-भाग्देक एव सन् भजते ; भोक्तृत्वाद्यवस्थायामपि तस्यात्मस्वरूप एवावस्थित इत्यर्थः ॥

तिष्ठन्तमुत्क्रामन्तं वा भुञ्जानं वा गुणान्वितम् ।
विमूढा नानुपश्यन्ति पश्यन्ति ज्ञानचक्षुषः ॥ १० ॥

तिष्ठन्तं स्थानव्यपदेशत्वात् कस्मिंश्चिच्छरीरे तेन तेन जात्यादिना स्व-देहेनावच्छिन्नतया स्थितिमनुभवन्तम्, तथा उत्क्रामन्तं तस्मात् पादतलात् शरीराच्छरी-

१. IO भारत
२. BN' प्रतिष्ठितो
३. IO and BN' भाग
४. BN' सेवन्ते
५. IO विभिन्नयुग्मतयापि
६. IO and BN' तदोन्मुखतया
७. IO उत्क्रामन्तं स्थितं वापि भुञ्जानं
८. BN' अविच्छिन्नतया

रान्तराश्रयेणायोद्गच्छन्तम्, जन्ममरणयोगित्व्यपदेशं भजन्तमित्यर्थ ; तथा तदन्तराले गुणान्वितं सत्त्वादिगुणसंयुक्तं शब्दादिविषयजं सुखाद्यात्मकं भोगमुपभुञ्जानं वेदकत्वमात्रेण तद्भोक्तृत्वव्यपदेशभाजमिति जन्ममरणस्थित्यवस्थास्वप्येकस्मिन्नेव स्वाभाविके सर्वक्षेत्राधिष्ठातरि स्वरूपे प्रागुक्तेन रूपेण वर्तमानं विमूढा मायाशक्तिमहिम्ना मनागपि स्वरूपप्रत्यवमर्शानुन्मेषलक्षणेन विशेषेण मूढा विचेतसः सम्यग्ज्ञानरहिता नानुपश्यन्ति, पारमार्थिकेन रूपेण स्थितमपि तथाप्रत्यवमर्शाभावात् न साक्षात्कुर्वन्ति। के तर्हि तं पश्यन्तीत्याह—ज्ञानचक्षुष । ज्ञानं यथावस्थितवस्तुसंवेदनमेव चक्षुर्लोचनं येषां ते, पश्यन्ति आत्मतया साक्षात्कुर्वन्ति ; न ह्यसौ रूपात्मकविषयैकसाधनभूतेन चक्षुरात्मनेन्द्रियेण दृश्यते । तद्दर्शने सम्यग् ज्ञानमेव साधनम् , अतस्तच्चक्षुष्ट्वेन निरूपितम् ॥

किंच—

यतन्तो योगिनश्चैनं पश्यन्त्यात्मन्यवस्थितम् ।
यतन्तोऽप्यकृतात्मानो नैनं पश्यन्त्यचेतसः ॥ ११ ॥

१. All except BN¹ राश्रयणया
२. BN¹ omits योगि
IO योगित्वव्यपदेशो
३. BN¹ तदनन्तरालगुणान्वितं
४. IO विषय
५. BN¹ देशमात्रभाजं भजन्तमिति
IO देशभाजं भुञ्जन्तं
६. IO धिष्ठानस्वरूपे
७. BN¹ विमूढः
८. IO omits प्रत्यव पि तथा
९. BN¹ विचेतसा
१०. BN¹ omits ज्ञानं
११. IO विषयरूपसाधन
१२. IO adds सन्
BN¹ adds सा
१३. IO omits तत्
१४. All except BS² यतन्ते

येऽपि ज्ञानचक्षुषो योगिनः समाहिताः, तेऽप्येनं परमात्मानं यथोक्तेन क्रमेण यतमाना नित्याविलुप्तोत्साहतया यत्नपराः सन्तः आत्मन्यवस्थितं सदा स्वभावत एवापरोक्षतया वर्तमानमेव पश्यन्ति, यथावत्प्रत्यभिजानन्तीत्यर्थः । अकृतात्मानस्तु यतमाना अप्येनं न पश्यन्ति । किमुक्तं भवति ? परमेश्वरानुग्रहं विनानुन्मिषितसम्यग्ज्ञानत्वादकृतैः तद्दर्शनायासम्पादित आत्मा अन्तःकरणं यैस्ते तादृशा आसुरसर्गभाजो यतमाना अपि तेन तेन केनचित्प्रकारेणोद्युक्ता अपि न पश्यन्ति, सम्यग्ज्ञानलक्षणस्य मुख्यस्य तद्दर्शनसाधनस्याभावात् ॥

यश्चायमेवमद्भुतशक्तिः परमात्मा सोऽहमेवेत्यात्मनिष्ठत्वेन तत्स्वरूपं प्रतिपादयितुमाह—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।
यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकम् ॥ १२ ॥

यदेतदादित्यगतं सूर्यसन्निविष्टं तेजो ज्योतिः समस्तं भुवनमभिव्यञ्जकतया प्रकाशयति, यच्चन्द्रमसि सोमे सन्निविष्टमखिलं जगदाप्याययति, यच्चाग्नौ जातवेदसि स्थितं पाकादिस्वकार्यं निर्वर्तयति, तत् त्रिधा भासमानमपि ममैवैकस्य सम्बन्धि एकमेव प्रकाशं संविदात्मकं जानीहि । न ह्यसंविदात्मकत्वे

---

१. IO एनमात्मानं
२. IO omits न
३. IO अकृतं
४. IO माना मुषितेन तेन केनचित्प्रकारेण
५. IO चात्मप्रत्यस्य तद्दर्शन
६. IO आदित्यान्तर्वर्ति

कस्यचित्स्वकार्यस्य संपादनपर्यवसायितोपपद्यते । सविचैवैकस्य पारमार्थिकस्य सर्ववेदितुर्ममैवासाधारणो धर्म । ततोऽहमेव सर्वमित्येतत्परम्[१] ॥

अत एवाह—

गामाविश्य च भूतानि धारयाम्यहमोजसा ।
पुष्णामि चौषधीः सर्वाः सोमो भूत्वा रसात्मकः ॥ १३ ॥

अहं वैश्वानरो भूत्वा प्राणिनां देहमाश्रितः ।
प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम् ॥ १४ ॥

गा पृथिवीमाविश्य स्वशक्त्या व्याप्य भूतानि चराचरान् प्राणिन अहमोजसा स्वबलेन धारयामि बिभर्मि ; पृथिवीगता धारणशक्तिर्ममैव स्वाभाविकं बलमित्यर्थ । तथा रसात्मकोऽमृतमय सोमो भूत्वा चन्द्रात्मतयात्मानमेवाभास्य सर्वा औषधी समस्तप्राणिप्राणनहेतुभूता द्रव्यजातीरहमेव पुष्णामि उपचिता संपादयामि , आप्यायनरूपा ममैव शक्तिरित्यर्थ । तथैवं वैश्वानरो जातवेदो भूत्वा तदात्मक सन्नहमेव प्राणभूता शरीरमाविष्ट प्राणापानाभ्या वह्नि सूर्येन्दुभावेनावस्थिताभ्या शक्तिभेदाभ्या समायुक्त सहितं भक्ष्यादिभेदैश्चतुर्विधमन्नम् ,

---

१ All except IO add एतत्
२. IO अवभास्य
३ BN¹ omits एव
४ IO omits वह्नि भेदाभ्यां
५. BN¹ स्थाप
६ IO omits सहित
७. BS² भेदश्चतु-
IO भेदाच्चतुर्विधमन्नं कर्मेणाभ्यवहार्यं

अन्नमभ्यवहार्यं द्रव्यम्, पचामि परिणामं प्रापयामि। जाठरस्याग्ने: सकलशरीर-विभक्तात्मतया वर्तमानस्य समस्तान्नरसपाचिका सर्वप्राणिजीवनहेतुर्या शक्ति सा ममैवैकस्य शक्तिमेत सम्बन्धिनीति सप्तमाध्यायादावुक्तन्यायेन प्रतिपादितै-वात्रोपपत्तिः ॥

किं बहुना—

सर्वस्य चाहं हृदि संनिविष्टो मत्तः स्मृतिर्ज्ञानमपोहनं च।
वेदैश्च सर्वैरहमेव वेद्यो वेदान्तकृद्वेदवि[दक्]देव चाहम् ॥१५॥

सर्वस्य कस्यचित्प्राणभूतोऽहमेक परमात्मा हृदि सर्ववस्तुसंवेदनाधि-करणभूते शरीरैकदेशे संनिविष्ट सर्वार्थसंवेदितृतया कृतस्थितिः। अतो मत्त मत्सकाशादेव नान्यत कुतश्चित्सर्वक्षेत्रज्ञाना स्मृतिर्ज्ञानापोहनलक्षण शक्तिप्रसर। किमनेनोक्तं भवति? इह सर्वक्षेत्रज्ञाना क्षेत्रविषयादिविभागविभक्तभावसंवेदक स्वभावाना संवेदनशक्ति तत्तत्पदार्थभावाभावपरिच्छेदकत्वात् द्विधा प्रवर्तते। तथाहि—कदाचित् कस्यचिदपोहनरूपतया प्रसरति। भावकत्वेन च प्रसरः द्विप्रकारः—ज्ञानात्मक स्मृत्यात्मकश्च, यदभूतपूर्वस्य प्रकाशनं तज्ज्ञानम्; यदनुभूत-पूर्वस्य प्रत्यवमर्शन सा स्मृति, उभयथापि प्रकाशनभावस्त्वपोहनमिति त्रिप्रकारोऽप्ययं

१ IO शक्तिमात
२. IO ध्यायो युक्तन्यायेन
३. All read किम बहुना
४ BN¹ omits न
५ IO स्मृतिज्ञानसंमोहनलक्षण:
BN¹ स्मृतिः ज्ञान-
६ IO संवेदने
७ IO पदाभाव
८. All except BN¹ प्रसरेत
९. IO omits अपि

क्षेत्रज्ञशक्तिप्रसर सवेदकात्मकत्वात् परमार्थसंवेदितुरेकस्मान्मत्त एव प्रसरन् मायावशान्नानाक्षेत्रज्ञसम्बन्धतया[1] प्रतीयत इत्यर्थ । यथा चैव प्रसरो मत्त प्रसरति[2], तथा सकलजगत्क्रियाप्रपञ्चप्रथनप्रथमकारणभूत[3] परापरतत्त्वरूप शब्द-राशिरपि[4] मत्त एव, तेन चानन्तप्रपञ्चप्रसृतेनाप्यहमेवैको वेद्य इत्याह— "वेदैश्च सर्वै" इत्यादि । वेदो वर्णाश्रमविभागव्यवस्थितविविधक्रियानियामक[5] शब्दराशि, तस्यान्तो[6] निष्ठा वेदान्त, आत्मैव परमेश्वर एक[7] तत्त्वमित्यादि ज्ञान-व्यवस्थापको वचनप्रपञ्च, तस्योभयरूपस्याप्यहमेवैक[8] कर्तेत्यनेन वेदवेदान्तात्मक शब्दस्य स्वत सिद्धत्व द्वैतवादिव्यवस्थापितेश्वरप्रणीतत्व च पराकर्तुमभिप्रेतम् । यतो-ऽयमत्राशय —इह अद्वयचिन्मकारैकस्वभाव एक पदार्थ परमार्थसन्निति[9] य ताव-त्सिद्धान्तो व्यवस्थापित, स चैवविधोऽह येनाव्यभिचारिणी[10] प्रत्यवमर्शात्मकेन धर्मेण तथाविध स्वरूप व्यवस्थापयामि, तत्पर शब्दतत्त्व तस्य[11] परमार्थतो मत्स्वरूपाभिन्नस्यापि मदिच्छोद्भावितेदन्ताभासमाननानाजगद्भावभेदव्यवस्थापकत्वेन विजृम्भमाणस्य तद्वदनन्तविकल्पात्मक स्वरूपमपर शब्दतत्त्वम्, तस्य चैवंविधस्य ज्ञानधर्मस्यैव[12] विकल्पात्मकस्य श्रोत्रग्राह्यध्वनिविशेषात्मकतयावभासित[13] पदार्थ

---

१ BN¹ मय्याशक्तिवशात् न क्षेत्रतया सबन्ध-

२. BN¹ adds इति

३. BN¹ जगत्प्रक्रिया

४. IO and BN¹ omit परापर...शिरपि

५ BN¹ नियामिक

६. BN¹ अन्ते

७ IO एकतत्त्वं

८. IO इत्यहमद्वय
BN¹ इत्याहमद्वय

९. IO सदित्यय

१०. All except BN² चारिण्या

११ BN¹ तदस्य

१२. BN¹ omits ज्ञान

१३ IO तथाविभासिन पदार्थ

सङ्केततया मयैव सत्यसङ्कल्पेन परमगुरुणा पूर्वेषामपि पूर्वेण परेण पुरुषेण मुख्य-कार्यज्ञेयार्थविषयतया वेदवेदान्तरूपवाचकत्वेन प्रतिनियमित तादृगर्थवाचकत्वेन चावभासमानमेव वेदवेदान्तयोर्मत्कार्यत्वम्, तदनेनानन्तप्रपञ्चेनापि वेदवेदान्त-प्राधान्यप्रतिपादितेन शब्दात्मकेन स्वशक्तिप्रसरेण नानावाच्यनिष्ठतयावस्थितेनापि परमार्थतश्चिदात्मकमत्स्वरूपव्यतिरिक्तपदार्थान्तराभावादहमेवैको बोद्धव्य इति " वेदैश्च सर्वैरहमेव वेद्य " इत्यनेनोक्तम् ॥

तदित्थं स्थिते त्रिप्रकार प्रमातृव्यवहारो व्यवस्थित । तथा च यस्य भौतिक-शरीरनिष्ठाहंप्रत्ययनिबन्धनो व्यवहार, स स्थूल प्रमाता, यस्य च तादृक्-शरीरवेदकतद्व्यतिरिक्तजीवनिष्ठाहंप्रत्ययनिबन्धनो व्यवहार स सूक्ष्म प्रमाता, द्वावेतौ भेदस्फुरणान्मायीयौ प्रमातारौ, यस्य पुनरशेषक्षेत्रव्यापकपरमार्थसैत्य सामान्यसंविल्लक्षणैकस्वभावपरमात्मनिष्ठाहंप्रत्ययनिबन्धनो भेदप्रतीतिकल्पनामात्र-संस्पर्शशून्यस्वरूपप्रत्यवमर्शमात्रात्मकव्यवहार स परमार्थसत्य परमपुरुष । तत्स्वरूप-समापत्तिश्च परा सिद्धि –इति क्रमेण प्रतिपादयन् शास्त्रसिद्धान्तसंग्रह दर्शयितुमाह–

द्वाविमौ पुरुषौ लोके क्षरश्चाक्षर एव च ।
क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते ॥ १६ ॥

---

१ IO omits पूर्वेषामपि
२ IO परमपुरुषेण
३ IO कत्वे प्रति
४ IO गर्थवादकत्वेन
५ IO omits स्थिते
६. IO त्रिकारणप्रोक्तमातृव्यव-
७. IO omits च
८ BN' omits यस्य
९ IO omits व्यवहार　निबन्धन
१० IO सुसूक्ष्म
११ IO omits प्रमाता .मायीयौ
१२ BN omits सत्य...सामान्य
१३ BN' सिद्धसंग्रह

उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः ।
यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः ॥ १७ ॥

यस्मात्क्षरमतीतोऽहमक्षरस्यापि चोत्तमः ।
अतोऽस्मि लोके वेदे च प्रथितः पुरुषोत्तमः ॥ १८ ॥

यो मामेवमसंमूढो जानाति पुरुषोत्तमम् ।
स सर्वविद्भजति मां सर्वभावेन भारत ॥ १९ ॥

यद्यप्यापातनिकयैव श्लोकचतुष्टयमेतद्व्याख्यातप्रायम्, तथापि विस्पष्टार्थं व्याख्यायते। इह हि लोके परमेश्वरमायाशक्त्युद्भावितक्रीडामात्रपरमार्थे समस्ते जगति द्वावेव पुरुषौ, द्विप्रकारैव भेदनिबन्धनव्यवहारा पुरुषजातिरित्यर्थः। अत एव तावन्योन्यभिन्नतया सर्वप्रमातृसंवेद्यस्वरूपत्वे सति इमाविति प्रत्यक्षनिर्देशविषये-णेदंशब्देन निर्दिष्टौ। कौ तौ द्वाविति तयो· संज्ञामाह—क्षरश्चाक्षर एव च इति। एतयोर्लक्षणमाह—एकस्तावत् क्षरः प्रतिक्षणविनश्वरजन्मादिविकारयोगिभौतिके-शरीरनिष्ठाहंकारात्मकत्वात् स्वरूपसम्खलनशील.। तथाहि—शरीरगता जन्मादयो विकारास्तद्धर्मानुविधायिनि तद्व्यतिरिक्तस्वभावेऽपि तस्मिन्नुपचर्यन्ते; तत. सर्वाणि भूतानि क्षर इत्युक्तम्। तथा निर्विकारसंविन्मात्रनिष्ठत्वात् कूटवत्पर्वत-

१. IO पारमार्थसमस्त-
२. IO omits इदं
३. IO इति तयो.
BN' इति च तयोः
४. IO omits भिभौतिक ...जन्मादयो
५. BS' गतजन्मादयः
६. IO स्वभावेनापि
७. IO कूटवत् सर्वतः

शिखरादिवन्निष्प्रकम्पतया स्थितः कूटस्थः। अत एव क्षरस्वरूपविपरीतत्वादक्षर इत्युच्यते। अनेन मध्यमा सूक्ष्मा दशा पुरुषस्य प्रतिपादिता। यस्यां ज्ञातृमात्रस्वरूपनिष्ठत्वात् क्षरस्वरूपं[1] ज्ञेयशरीरधर्मानुविधायित्वं च नास्ति परस्परभेदेन व्यवस्थिता नानाक्षेत्रज्ञप्रतीतिश्च न तावदुच्छिन्ना, एवं मायोद्भावितं पुरुष[2]जातिद्वैविध्यं प्रतिपाद्य पारमार्थिकं परपुरुषस्वरूपं प्रतिपादयितुमाह—उत्तमः पुरुष इत्यादि। एताभ्यां क्षराक्षरशब्दप्रतिपादिताभ्यां पुरुषाभ्यामन्यः सत्यस्वरूपमात्रप्रतिष्ठत्वात् विलक्षणः; अत एवोत्तमः सर्वपुरुषातिशायिधर्मा[3]। अत एव परमात्मा मायाहेतुकागमापायानित्यधर्मसामानाधिकरण्याभावात्परमो निरुत्तरः सत्य आत्मा चेतनोऽसाविस्युक्तः। कोऽसौ? यो निष्प्रतीघातस्वच्छन्देच्छापरिस्पन्दत्वादीश्वरः सन्निदं चराचरमनन्तभावजातं[4] सन्ततं लोकत्रयं सकलं जीवलोकमाविश्य, तथा प्रकाशकतया व्याप्य बिभर्ति धारयति, इत्थं स्थितिमनुभावयति, सामान्यसंवित्प्रकाश्यमात्रप्रकाशमानतामन्तरेण[5] न कश्चित्पदार्थो न केनचित्पदार्थेनावस्थातुमलमित्यसकृदुक्तमेवैतत्प्रकरणे[7]। लोकत्रयस्य चाव्ययमिति विशेषणं प्रवाहनित्यत्वादक्षयत्वविवक्षया बोद्धव्यम्[8]। अत एव मायीयपुरुषवैलक्षण्यं प्रतिपादयितुमाह—यस्मादित्यादि। यतो हेतोर्यथाप्रतिपादितस्वरूपं क्षरं स्थूलं पुरुषमतिक्रान्तः, अक्षरस्य

---

१. IO and BN¹ रूपत्वेय
२. IO पुरुषं जानन्ति। द्वैविध्यप्रति
३. BS² धर्मः
४. IO भावसन्ततं
५. BS² प्रकाशमान
६. IO मिति महदुक्तमेवै.
७. IO and BN¹ प्रकारेण
८. IO adds इति
९. IO सूक्ष्म
१०. BN¹ adds सूक्ष्मस्य

च यथाप्रतिपादितस्वरूपस्य सूक्ष्मस्यासत्यभेदप्रत्ययाभावादुत्तमः प्रकृष्टस्ततोऽन्वर्थया संज्ञया लोकशास्त्रयोः पुरुषोत्तम इत्यहं प्रतीतः ; एवं च यथोक्तेन प्रकारेण यो योगी मामसंमूढः सन्देहादिमोहैरहितः सन् पुरुषोत्तमतया जानाति आत्मत्वेन प्रत्यवमृषति, सविशेषितज्ञेयत्वात्सर्वभावेन सर्वात्मकत्वेन वास्तवेन भजति सेवते, स एको मुख्यया वृत्त्या मद्भक्त इत्यर्थः । सर्वभावसंवित्स्रोतसां सामान्यसंवित्प्रकाशसागरसामरस्यानुभवलक्षणं विज्ञानं मद्भक्तेः परं रूपमुक्तम् । यदुक्तं स्तोत्रे केनचित्—

" चित्प्रकाशपरामर्शशक्तिमूर्त्याविशिष्यते ।
अष्यद्वयदशोन्मेषे भव्यानां भक्तिरेव ते ॥" इति

यथोक्तज्ञानफलनिर्देशेनाध्यायमुपसंहरन्नाह—

इति गुह्यतमं शास्त्रमिदमुक्तं मयानघ ।
एतद्बुद्ध्वा बुद्धिमान् स्यात् कृतकृत्यश्च भारत ॥ २० ॥

इति यथोक्तेन प्रकारेण, गुह्यतमं सर्वरहस्यातिशायि शास्त्रमिदं भवता प्रत्यक्षानुभूतफलं मयाभिहितम् ; नातः परं वक्तव्यमस्तीत्यर्थः । अत एवाह—एतद्बुद्ध्वा

१ IO and BN² omit सूक्ष्मस्य
२. IO अन्वर्थतया
३. IO and BS¹ भेदरहितः
४. BN¹ adds सः
५. BN¹ तत्त्वतात्
६. BN¹ सर्वाभावसरित्स्रोतसां
७. IO स्वरूपं
८. IO स्तोत्रं
९. IO ज्ञानदल
१०. IO शास्त्रं मया प्रोक्तं तवानघ

यथावदवगम्य बुद्धिमान् पुरुषः स्यात्; अविज्ञाते तस्मिन् सत्यामपि बुद्धावबुद्धिमन्त एव प्रमातारः शरीरादिहेयवस्तुनि मग्नचित्तत्वात्तेषां तथैतदेवानुष्ठाय कृतकृत्यः पुरुषः स्यात्; कृत्यं निरवशेषितं कृत्यं यथाकरणीयं येन स तथा; एतद् ज्ञानप्रतिपादितार्थानुष्ठानव्यतिरेकेण या काचित् क्रियानुष्ठीयते, तया सम्यगनुष्ठितयापि न कृतार्थः स्यात्—इति सर्वज्ञानानां सर्वक्रियाणां च यथोक्तज्ञाननिष्ठत्वेनानुष्ठितानां परमात्मस्वरूपसमापत्तिलक्षणपरसिद्धिसाधनत्वमित्योम् ॥

ऊर्ध्वाधःक्लेशमूलाश्रिनफलमदवीकर्मभूमूरिशाखा-
सन्तानत्यक्तसत्त्वाद्युपचितविषयव्रातपत्रौघचित्तम् ।
अश्वत्थं छेत्तुमेनं भुवनत्रयमयं तत्त्वदृग्व्यक्तिहेतोः
सन्तोऽध्यायेऽत्र शस्त्रं तपनत्रिगणिते बोधमुखेनयन्तु ॥

इति [6]श्रीमद्राजानकरामविरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
पञ्चदशोऽध्याय ॥



१. BN' omits यथाव...बुद्धाव
२. BN' च बुद्धि-
३. BN' कृतार्थो
४. BN' सर्वज्ञानां
५. BI
६. BS' omits श्री...नाम्नि
७. BN' रामकवि

## ॥ अथ षोडशोऽध्यायः ॥

---

एवमस्य पञ्चदशाध्यायपर्यन्तशास्त्रोपनिषद्भूतस्य ज्ञानस्य पूर्वम्,[1] [2]

" महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः ।
भजन्तेऽनन्यमनसो ज्ञात्वा भूतादिमव्ययम् ॥ "

इत्यादिना,[3] तथा[4]—

" मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः ।
आसुरीं राक्षसीं चैव प्रकृतिं[5] मोहिनीं श्रिताः ॥ "

इत्यादिना सर्गद्वयोपोद्घातेन[6] विषयविषयिविवेचनादि यत्सूचितं तदिदानीमध्यायेनानेन वितत्य निर्णेतुं भगवानाह[7]—

अभयं सत्त्वसंशुद्धिः ज्ञानयोगव्यवस्थितिः ।
दानं दमश्च यज्ञश्च स्वाध्यायस्तप आर्जवम् ॥ १ ॥

---

१. BS[1] पर्यन्तं
२. BS[1] अभ्यधीम्
३. All except BS[2] इत्यादि
४. BS[2] omits तथा
IO omits तथा...इत्यादिना
५. BN[1] omits प्रकृतिं...श्रिता:
६. BS[1] reads सर्गद्वयोपोद्घातेन after सूचितं
IO and BN[1] add च
७. IO भगवानुवाच

अहिंसा सत्यमक्रोधस्त्यागोऽभक्तिरपैशुनम् ।
दया भूतेष्वलौलत्वं च मार्दवं ह्रीरचापलम् ॥ २ ॥

तेजः क्षमा धृतिस्तुष्टिरद्रोहो नाभिमानता ।
भवन्ति संपदं दैवीमभिजातस्य भारत ॥ ३ ॥

इह प्रथमाध्यायोपोद्घातप्रदर्शितविभागेन दैवस्यासुरस्य च सर्गस्यावान्तरभेदपरिकल्पनया यद्यपि बहवः प्रकारा उक्ताः, तथाप्यधुना सूक्ष्मैकनिष्ठताभिव्यञ्जकगुणसामग्रीसंपन्नस्योत्तमस्य दैवस्य सर्गस्य परापरभेदेन द्विप्रकारत्वं तावत् प्रतिपाद्यते । तत्राभयादयो नाभिमानान्ताः सप्तविंशतिगुणाः सामान्येन दैवीं संपदं दैवसर्गसम्पत्तिमभि तदाभिमुख्येन तां स्वीकर्तुं जातस्य कर्मभूमौ लब्धजन्मनः पुरुषस्य भवन्तीति यद्यप्युक्ताः, तथाप्यभयादयः प्रथमे चत्वारो गुणाः परां दैवीं संपदमभिजातस्य भवन्ति; दानादयस्तु विशेषा अपरामभिजातस्य भवन्तीति विशेषोऽत्र विवक्षितः । स तथैव व्याख्यायते । तत्राभयं सर्वतः कुतश्चिच्चेतनाचेतनरूपात् भावजाताद्यथोक्ताद्वयज्ञानप्रतिष्ठितबुद्धित्वे सत्यात्माभेदेन प्रतिपद्यमानाद्वयस्मात्मान्यैतिरिक्तपदार्थाश्रयस्य श्रेप्सितविषयाप्राप्तिविघातादिहेतोः सौख्यस्याभावः । तच्च परमात्मस्वरूपमापन्नकल्पस्य योगिनो भवति,[13] यदुक्तम्[14]—

---

१. IO त्यागश्शान्तिरपेशुनम् [पैशुनम्]
　BN¹ त्यागो भक्तिरपैशुनम्
२. BS¹ अलोलुत्वं
३. All except BN¹ नातिमानिता
४. IO and BN¹ भवन्ति
५. IO तथापि मोक्षैक
६. All except IO नातिमानितान्ताः
७. BN¹ उक्त.
८. IO भूतात्
९. BN¹ आत्मभेदेन
१०. BS¹ आत्मन्यति
११. IO सर्वस्यास्य
　BN¹ सत्त्वस्यास्य
१२. IO परमात्मतत्त्व-
१३. BS¹ and BS² भवन्ति
१४. BS¹ adds तत्पत्तदेवपादैः

"यो विकल्पमिदमर्थमण्डलं पश्यतीश निखिलं भवद्वपुः ।
स्वात्मपक्षपरिपूरिते जगत्यस्य नित्यसुखिनः कुतो भयम् ॥" इति ।

तथा तस्य कारणभूता सत्त्वशुद्धिः, सत्त्वगुणप्रधानत्वात् सत्त्वशब्दवाच्यस्य चित्तस्य शुद्धिः भेदमलप्रक्षालनाभ्यासान्नैर्मल्यम् । तथा तस्या अपि कारणभूता ज्ञाने यथाप्रतिपादितशास्त्रार्थबोधैर्व्यवस्थितिः निरुपप्लवा प्रतिष्ठा[3] । तथा तद्धेतौ योगे शास्त्रचोदितस्वकर्मानुष्ठानलक्षणे परस्मिन् समाधौ व्यवस्थितिः । तथैव निर्विप्लवा प्रतिष्ठेत्येते[4] परां दैवीं संपदमभिजातस्य योगिनो धर्माः संभवन्ति । स ह्यारूढदशां प्राप्तः । अथ दानं स्वद्रव्यस्य परस्वत्वापादनम्; तच्च द्विप्रकारम्—करुणामात्रहेतुकं दीनार्थार्थिजनविषयत्वेनाविशेषप्रवृत्तिकमेकम्, शास्त्रचोदितविधिविशेषसम्पत्तये विशिष्टेतिकर्तव्यतासंस्कृतं पात्रदेशकालादिविशेषमपरम् । तथा दमः शास्त्रविरुद्धेभ्य अर्थेभ्य इन्द्रियाणां बाह्याभ्यन्तराणां निग्रहः । तथा यज्ञो वर्णाश्रमकर्मविभक्तो नित्यनैमित्तिकभेदेन द्विविधो विशिष्टदेवतायागः । तथा स्वाध्यायो यथासमध्येयत्वेनोपदिष्टस्य शास्त्रस्य मन्त्रादेर्वाध्ययनमभ्यासेन बोधः । तथा तपः तथैव नित्यनैमित्तिकभेदेन शास्त्रीयनियमपूर्वं क्षुत्तृष्णादिसहिष्णुतया शरीरतपनम् । तथा आर्जवमृजुत्वं प्रकृतिसरलैर्ब्रह्ममार्गैकालम्बनत्वात्

१. BS[2] notes as an alternative reading दमर्थ-
२. BN[1] बोधो व्यव
३. IO प्रकृष्टा
४. IO इत्येतैः
५. IO दीनार्थार्थिजन
६. IO संभवं
७ IO क्रमविविक्तो BN[1] क्रमे
८. IO योगः
९. IO मन्त्रादेवाध्ययन
१०. IO सरलब्रह्माशङ्कापुरस्तनत्वात्
BN[1] सरलब्रह्माण्डकालम्बन

समस्तकायवाङ्चित्तसाध्यक्रियाविशेषसाफल्यैककारणमकौटिल्यम्। तथा अहिंसा शास्त्रनिषिद्धायाः प्राणिवधादिक्रियायाः कामक्रोधलोभहेतुकायाः कृतकारितानुमोदितादिविशेषपरिशुद्धं परिवर्जनम्। तथा सत्यमात्यन्तिकभूतहितसंपादनाभिसन्धिपरिशुद्धं यथादृष्टानुमितार्थकथनम्। अक्रोधो हिंसानिष्पत्तिहेतोर्विवेकहारिणः कोपाख्यस्य चित्तक्षोभस्याभावः। त्यागः, दानस्योक्तत्वात्, तत्तत्क्रियाफलाभिसन्धेः परिहारः। असक्तिः शास्त्रविहितसेव्येषु विषयेष्वनिमग्नचित्तत्वम्। अपैशुनम्, पिशुनः परदोषसूचकः, तस्य भावः पैशुनम्, तदभावो राजादिविषयद्वेषात्परावद्याविष्करणाभावः। तथा दया भूतेषु सर्वप्राणिषु क्लेशापन्नेषु तदुज्जिहीर्षया करुणा। तथा अलौल्यं निषिद्धेषु लम्पटत्वं लौल्यम्, तदभावः अलौल्यं तेषु अप्रवृत्तिरित्यर्थः। विहितेषु प्रवृत्तौ निषिद्धेषु विषयेषु प्रवृत्तावपि सत्यां रागद्वेषरहितत्वेन भाव्यम्। तथा मार्दवं मृदुः निखिलेषु भूतजातेषु स्वात्मरूपेश्वरत्वभावनयातिकोमलान्तःकरणः, तस्य भावो मार्दवम्। तथा ह्रीर्लज्जा अस्मिन् निषेव्यमाने साधुजनो मां विगर्हेदित्याशङ्कया दुश्चिन्तितदुर्वचनदुश्चेष्टितेषु जुगुप्सेति यावत्। तथा चापलं चपलः सत्कार्येष्वस्थिरः, तस्याभावश्चापलम्, तदभावोऽवश्यकरणीयेष्वप्रमत्तते-

---

१ IO शुद्धि
२ IO कोपावेशस्य
३. IO and BS[1] तत्, क्रिया
४ IO परिहारः शान्तिशास्त्रविहिते मेष्वेऽप्यनि समस्तिरत्वं
५. BN[1] पैशुन्यं
६. IO तथा भूतेषु सर्वभूतेषु सर्व प्राणिषु
७ BN adds लोल
८ IO omits लम्पट ...विषयेषु
९. IO रागदोष
१०. IO omits तथा ...मार्दवम्
११ BN[1] जुगुप्सतेति
१२ BN[1] अप्रमत्तत्वं

त्यर्थ । तेज परैरनभिभवनीयत्वं कारण स्वाभाविकमोज । तथा क्षमा तेजस्वित्वे सत्यपि परापराधसहिष्णुता । धृतिरवसादहेतौ सन्निहितेऽपि स्वपरिस्पन्दाच्यवनलक्षण धैर्यम् । तथा तुष्टि सर्वथा सर्वदा विषाददोषानाक्रान्तचित्तत्वम् । तथा अद्रोह प्राणिना हननविषयाया इच्छाया अप्यभाव । तथा नाभिमानिता मानो देहादिषु अनित्येष्वहकार , तथा परतन्त्रेषु भोगेषु ममकार , स सर्वदा निश्चलत्वादतिशयवानभिमान , तदभिभवो नाभिमान , स च मुमुक्षूणामेव सभवति , ते हि यथोक्ताभिमानमहादोषोच्छेदे नित्योद्यता भवन्ति , अत एव च तस्मिन् सति दानादयो धर्मा दैवसपदभिव्यक्तिहेतव सम्पद्यन्ते इति सर्वेषा सत्त्वैरकत्वेन तस्य पर्यन्ते निर्देश कृत । एव मुमुक्षुजनाव्यभिचारिणीं दैवसर्गाभिव्यञ्जिका परापरा गुणसामग्रीं प्रतिपाद्य इदानीं तथैव द्विप्रकारस्य तद्विपरीतस्यासुरस्य सर्गस्य तां क्रमेण प्रतिपादयति । दैवसर्गवत्परापरभेदेनासुरोऽपि सर्गो द्विप्रकारो विवक्षित । तत्र तमोगुणप्रधानो नैरकतिर्यग्योनिपातहेतु कर्माधिकृतपुरुषात्मकोऽपर इत्यस्याग्रे विस्तरेण विशेषणानि वक्ष्यति ॥

---

१. IO पराभिभव
२. BN[1] नीयकारणत्व
३. BN[1] सुपरि
४ IO अद्रोह
५ IO and BN[1] भाभिमानिता
६ IO omits स
७. BS[1] and BS[2] अतिमान तदभिभावो नातिमान
BN[1] अनभिमान उच्यते तद्भावो नाभिमान.
८ BS तभिभाव
९ BS[1] and BS[2] स्वातिमान
१० IO and BN[1] च्छेद
११ IO सत्त्वारत्वेन
१२ IO अत
१३ IO omits अपि
१४ IO विवर्जित
१५ IO नरकबहिर्योनियो निपातकर्मा
१६ All except BN[1] हेतु

संप्रति तु सामान्यगुणोद्देशद्वारेणासुरीं संपदं प्रतिपादयितुमाह—

दम्भो दर्पोऽभिमानश्च क्रोधः पारुष्यमेव च ।
अज्ञानं चाभिजातस्य पार्थ संपदमासुरीम् ॥ ४ ॥

एते धर्मा आसुरीं रजस्तमःप्रधानत्वादासुरशब्देनोक्तां संपदं शरीरादिसंपत्तिमभिमतां स्वीकर्तुं जातस्य कर्म[1]भूमावुत्पन्नस्य पुरुषस्य भवन्ति । तत्र दम्भो दृष्टमात्रपरतया श्र[2]द्धादिरहितचित्तत्वेन नानाविधधर्म[3]क्रियाचरणम्[4] । दर्पः स्वगुणसंभावनया हर्षमोहात्मकः चित्तविकारः अभिमानात्मा ख्यातः । क्रोधो हिंसाहेतु[5]र्विकारः । पारुष्यं वाक्चित्तचेष्टानां रू[6]क्षता । अज्ञानं ज्ञानस्य प[7]दार्थतत्त्वबोधस्याभावः दम्भादिसर्वदोषहे[8]तुभूतत्वात् सर्वे[9]षामन्ते निविष्टः—इत्येते रजस्तमःप्रभ[10]वा धर्मा आसुरं सर्गं सूचयन्ति ॥

एतयोः सर्गयोः फलं निर्दिशन्नाह—

दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।
मा शुचः संपदं दैवीमभिजातोऽसि पाण्डव ॥ ५ ॥

---

१. IO कर्मणः कर्माद्युत्पन्नस्य
२. BN¹ श्रद्धारहित
३. IO धर्मकृत्
४. IO omits चरणं
५. IO हेतुविकारः
६. IO क्रौर्य instead of रूक्षता
७. IO पदार्थत्वे बोध
　BN¹ पदार्थतत्त्वे बोध-
८. BN¹ भूतहेतुत्वात्
९. IO सर्वेषां सर्वे निर्दिष्टाः
१०. IO प्रभवधर्माः

एषा यथानिर्दिष्टा दैवी संपद् दैवसर्गनिर्वृतिः[1] विमोक्षाय संसारदुर्गापक्रान्तये ; न हि यथोक्तगुणानुमितदैवसर्गभोग्विमोक्षमनवाप्य ततो निवर्तत इत्यर्थः । आसुरी पुनस्तद्विपरीता बन्धलक्षणैतद्विपरीतफलैव । ततश्च त्वं दुस्तरात्संसारदुर्गात् कथमहमेवंविधो मुच्येयेत्यात्मन्यसामर्थ्यजनितं[5] शोकं मा कार्षीः, यतो यथोक्तलक्षणसंवादाद्दैवीं[6] संपदमभिजातोऽसि ॥

अथ द्विविधत्वमेव सर्गस्य कर्माधिकृतं जनं प्रति नियमितुमाह—

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।
दैवो विस्तरतः प्रोक्त आसुरं पार्थ मे शृणु ॥ ६ ॥

यथाप्रतिपादितेन विभागेन द्वौ द्वावेव, न तृतीयः, भूतानां कर्मभूमिजन्मनां पुरुषाणां सर्गौ प्रादुर्भावौ । कौ तौ ? दैव आसुर एव च । तत्र सत्त्वगुणप्रधानत्वाद्देवसम्बन्धिसर्गसदृश उपचाराद्दैवशब्देनोक्तः एकः । तथा रजोगुणप्रधानत्वात् आसुरसम्बन्धिसर्गसदृशः तथैवोपचारात् द्वितीयः ; तयोर्मध्याद्दैवः परापरगुणप्रतिपादनैकक्रमेण वितत्य प्रतिपादितः । आसुरस्तु सामान्यतः प्रतिपादित. । तमिदानीं कथ्यमानमवधारय ॥

---

१. BN¹ निवृत्तिः
२. IO भारिहिमोक्ष
३. IO लक्षणं
४. IO omits त्वं
५. IO जनित
६. BN¹ दैवीसंपदति
७. IO प्रादुर्भूतौ
८. IO दैव
९. IO omits उपचारा...तथैव
१०. IO and BS¹ पादनमात्रेणोद्दिष्टो विस्तरेण प्रतिपादितः । BN¹ प्रतिपादनमात्रेणोद्दिष्टो न न विस्तरेण गुणप्रतिपादकक्रमेण वितत्य

तत्रापरस्य तावदासुरस्य सर्गस्य स्वरूपमाह—

प्रवृत्तिं च निवृत्तिं च जना न विदुरासुराः ।
न शौचं नापि चाचारो न सत्यं तेषु विद्यते ॥ ७ ॥

असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।
अपरस्परसंभूतमकिंचित्कमहेतुकम् ॥ ८ ॥

एतां दृष्टिमवष्टभ्य नष्टात्मानोऽल्पबुद्धयः ।
प्रभवन्त्युग्रकर्माणः क्षयाय जगतोऽशुभाः ॥ ९ ॥

आसुरा उद्रिक्ततमसो जनाः प्रवृत्तिं संसारप्रवर्तनहेतुभूतं शास्त्रचोदितं कर्म न विदुः न जानते; न च निवृत्तिं संसारनिवर्तनहेतुभूतं ज्ञानादिसंस्कृतं कर्म ते स्वर्गापवर्गलक्षणफलनिरपेक्षतया दृष्टमात्रप्रयोजनं कर्मारभन्ते इत्यर्थः । अत एव प्रवृत्तिनिवृत्तिसाधनानि तेषां न संभवन्तीत्याह—न शौचमिति । शौचं शास्त्रनियमितेतिकर्तव्यतासंपाद्यं शुचित्वं कायचित्तयोः शुद्धत्वं तेषां नास्ति । नापि चाचारः, शास्त्रनियमितं वाङ्मनःकर्मभिर्विशिष्टमाचरणम् । न च सत्यमुक्तलक्षणं यथादृष्टानुभूतार्थकथनम्, सर्वत्र यथेष्टचेष्टा एवेत्यर्थः । कुत एवम्? यतः

---

१. IO and BN[1] तत्र परस्य
२. IO and BN[1] च
३. IO अहिताः. This is an alternative reading in BN[2].
४. IO adds शास्त्र...ज्ञाना
५. IO omits निवृत्तिं
६. IO omits शौचं
७. IO कारणता
८. IO शास्त्रादिवाङ्-
९. IO कर्मादिभिः
१०. IO यथेष्टं चेष्टन्त एव

ते इदं जगज्जीवलोकं शास्त्रीयमर्यादया वर्तमानमसत्यमवस्तुभूतमाहुः, अतश्च तत्सिद्ध्यर्थं शास्त्रेण शौचादिमर्यादा या स्थापिता मुग्धप्रतारणेति ते कथयन्तीत्यर्थः ; अत एवाप्रतिष्ठं त एतदाहुः । नाप्यस्य निसर्गासत्यरूपस्य शौचादिः प्रतिष्ठा स्थितिः कर्तुं शक्येत्यर्थः । अनीश्वरं चैतदाहुः । नास्य कश्चिदीश्वरो नियन्ता संभवति, यत्प्रणीतशास्त्रचोदिताः सोमादयोऽनुष्ठेया भवेयुः । अपरस्परसंभूतं भावनामन्योन्यकार्यकारणभावो यः प्रत्यक्षदृष्टः शास्त्रेण वा व्यवस्थापितः तं ते नास्तिकाः स्वभावमात्रवादिनो नेच्छन्ति । सर्वः कश्चिद्भावः स्वयमुत्पद्यते, स्वयं च विनश्यति, न कारणान्तरमपेक्षत इत्यपरस्परसंभूतमिदं सर्वमाहुः । तथा अकिंचित्कमविद्यमानं किंचित्सत्यरूपमंशमात्रमपि यस्य तत्तादृशमाहुः । अत एवाहेतुकं स्वकर्मादिकारणरहितं तेषामेवंविधानां लोकायतिकादीनां तामसानां व्यापारमाह । ते हि एतामेवंविधामीश्वरकर्मपरलोकाद्यभाववादमयीं दृष्टिं नास्तिकदर्शनमवष्टभ्य गाढमवलम्ब्य नष्टात्मानो नष्ट आत्मा सत्त्वेवादर्शनं प्राप्तः परमार्थसत्यश्चिद्रूपः पदार्थो येषां ते तथा ; त एवाल्पबुद्धयोऽल्पमात्रविषयदर्शित्वात् परिमिता

---

१. IO यः
BN[1] omits this word.
२. BN[1] वर्तनं
३. BN[1] and IO तत्स्थित्यर्थं
४. IO omits या
५. BN[1] adds सा
६. BN[1] प्रतारणा
७. BN[1] and BS[1] इत्याहुः
८. IO and BS[1] एवातिष्ठन्त
९. BN[1] नास्य
IO नापि निस
१०. IO and BN[1] शौचादयः
११. BN[1] करणभावः
१२. IO सत्यरूपं चिदंशरूपमात्रमपि
१३. IO omits नां लोक...मेवंविधा
१४. BN[1] आहुः
१५. IO omits गाढमवलम्ब्य
१६. IO and BS[1] आत्मैवमेवादर्शन

बुद्धिर्या[1] येषां ते तथाविधाः सन्त उग्रकर्माणो दारुणव्यापारा जगतो जीवलोकस्य क्षयाय विनाशाय प्रवर्तन्ते, तदर्थमेव कर्माणि कुर्वते। किमुक्तं भवति? त एव विधा नास्तिका यानि[2] कर्माणि कुर्वते[3], तेषां नरकतिर्यक्स्थावरादिभवपरिणामं फलम्, न[4] ते पुनः कर्मभूमौ पुरुषयोनिमासादयन्तीत्यर्थः। अत एवाशुभाः पापात्मकाः॥

एवमुद्रिक्ततमस्कस्यावरस्यासुरसर्गस्य[5] स्वरूपं प्रतिपाद्य इदानीमुद्रिक्तरजस्कस्यापरस्य तत् प्रतिपादयितुमाह—

काममाश्रित्य दुष्पूरं दम्भलोभमदान्विताः[6]।
असद्ग्रहाश्रिताः[7] क्रूराः प्रचरन्त्यशुचिव्रताः[8]॥ १०॥

अन्ये आसुरा जना एवंविधाः प्रचरन्ति व्यवहरन्ति। किं कृत्वा? दुष्पूरं दुःखेन पूरयितुं[9] कर्तुं न शक्यम्। कामं[10] विषयतृष्णात्मकं सङ्कल्पमाश्रित्यावलम्ब्य। अत एव दम्भेनोक्तलक्षणेन लोभेन गर्वेण[11] मदेन चित्तोद्रेकेनान्विता अनुगता[12] व्याप्ताः। तथा असद्ग्रहाश्रिताः तथाविधदुष्टाभिनिवेशावलम्बिनः[13]। ततश्च क्रूरा[14] हिंसादिषु निरपेक्षाः। तथा अशुचिव्रता अशुचीनि शास्त्रपरिहृष्टनियमापवर्तने-

---

१ IO व्यापारात्मन
२ IO omits यानि
३. IO कुर्वन्ति
४ IO एते पुन
५. IO अपरस्य तत्त्वमुत्थार्थं प्रतिपद्य
६ IO दम्भमानमदान्विता
BN[1] दम्भलोभसमन्विता
७. BS[1] असद्ग्रहा
८ BS[1] प्रसरन्ति
९ BS[1] and BS[2] प्रेरयितु
१०. IO कामविषय
११. IO गर्वेन
१२. IO अनुगन्ताव्याः
१३. IO लम्बना
१४. BS[1] and BS[2] क्रूरहिंसादिषु

नाशुद्धानि तानि तानि काम्यानि व्रतानि नियमविशेषा येषां ते तथोक्ताः। किमुक्तं भवति? रजःप्रधानत्वाद् व्रतादिरूपं कामनानिमित्तकं कर्मारभन्ते; तमोऽनुगतत्वात् तत्तेषामशुचि भवति, दम्भादिदोषान्विताश्च ते भवन्ति ॥

किंच—

चिन्तामपरिमेयां च प्रलयान्तामुपाश्रिताः।
कामोपभोगपरमा एतावदिति निश्चिताः ॥ ११ ॥

आशापाशशतैर्बद्धाः कामक्रोधपरायणाः।
ईहन्ते कामभोगार्थानन्यायेनार्थसञ्चयान् ॥ १२ ॥

ते एवंविधा अर्थसञ्चयान् धनसमृद्धीः ईहन्ते चेष्टन्ते। कीदृशान्? कामभोगार्थान् विषयास्वादप्रयोजनान्। कथमीहन्ते? अन्यायेन—न्यायः शास्त्रीयाधिकारदेशकालावस्थाद्यपेक्षमुख्यकल्पानुकल्पविहितस्ववृत्तिनियमः, तं विना। कीदृशाः सन्त एवं कुर्वन्ति? चिन्तामर्थार्जनविषयं ध्यानमपरिमेयां तैस्तृष्णाया आनन्त्याद्बहुविधाम्[११] किंतु प्रलयान्ताम्। प्रलयो विनाशः शरीराभावोऽन्तः

१. IO तास्तु तेषां
२. IO and BN' अशुचिर्भवेत्
३. IO संप्रलया
४. IO लोभार्थं
५. IO समृद्धा.
६. IO प्रयोजकान्
७. BN' अन्यायः
८. IO मुख्ये कालानुकल्पविहित
९. IO अर्जने विषयां
१०. IO असंयततृष्णायाः
११. BN' विधात्

अवसानं यस्यास्तां तादृशीमुपाश्रिताः आलम्बितवन्तः । तथा कामोपभोगपरमाः काम्यन्ते इति कामा विषयसुखानि, तेषामुपभोगः संततमनुभवनं परमफलत्वेन प्रकृष्टो[४] येषाम् । अत एव एतावत्कामोपभोगमात्रमिह सार इति निश्चिता निःसंशयबुद्धयः । अत एव तद्विषयाभिराशाभिर्मनोरथैरेव पाशशतैः बन्धनरज्जुसमूहैर्बद्धाः सर्वतो विघ्नितविषयान्तरस्वातन्त्र्याः । ततश्च कामक्रोधौ रागद्वेषौ इष्टानिष्टविषयौ परायणमाश्रयो येषां ते तथाविधाः ॥

किंच—

इदमद्य मया लब्धमिदं प्राप्स्ये मनोरथम् ।
इदमस्तीदमपि मे भविष्यति पुनर्धनम् ॥ १३ ॥

असौ मया हतः शत्रुर्हनिष्ये चापरानपि ।
ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी ॥ १४ ॥

आढ्योऽभिजनवानस्मि कोऽन्योऽस्ति सदृशो मया ।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः ॥ १५ ॥

अनेकचित्तविभ्रान्ता मोहजालसमावृताः ।
प्रसक्ताः कामभोगेषु पतन्ति नरकेऽशुचौ ॥ १६ ॥

---

१. BS[1] and BN[2] कीदृशीं
२. IO and BN[1] यया
३. BN[1] कामानि
४. IO adds यो
५. IO एव ■ तावत्
　BN[1] एव तावत्
६. IO मनोरमैः
७. IO omits बद्धाः
८. IO संयतविघ्नित
९. BN[1] ततश्च

इत्येवंविधेनाप्यज्ञानेन[1] तत्त्वार्थप्रबोधाभावेन विमोहिता वैचित्र्य[2]मापादिताः सन्तः अशुचावत्यन्तामेध्ये निरये गर्भवासादौ निपतन्ति निमज्जन्ति, पुनःपुनर्जायन्त इत्यर्थः। कीदृशेन जैनेन[3]? अद्यास्मिन् दिने तावदिदं धनादि[4] वस्तु मया लब्धं स्वीकृतम्, इदं च मे चेतसि स्थितं मनोरथमभिलषितं वस्तु प्राप्स्ये इदानीमधिगमिष्यामि; इदं तावद्धनं सुवर्णाद्यस्ति विद्यते, इत्थं चान्यद्रत्नादि भविष्यति स्वत्वमापत्स्यते; तथासौ कश्चिद्रिपुर्व्यापादितः, अतः[5] परानपि तैस्तैरुपायैर्व्यापादयिष्यामि; तथाहमीश्वरो द्रव्यपुरुषादीनां स्वामी; तथाहं भोगी विषयसुखानुभविता; तथा[6] सिद्धो लब्धप्रतिष्ठोऽहम्; तथा बलवान् दौर्दर्ध्य[7]युक्तोऽहम्; तथा सुखी स्वीकृताभिलषितविषयैः[8]; तथा आढ्यो धनवान् अभिजनवान् कुलीनोऽहम्; किं बहुना! कः परो मया तुल्यो विद्यते! तथा यक्ष्ये, यज्ञानाचरिष्यामि[9]; तथा मोदिष्ये हर्षमनुभविष्यामि—इत्येवंविधैर्भूतवर्तमानभविष्यत्कालभाविषु शरीरविषयादिषु नित्येषु भावेषु विकल्पैरनेकै[10] प्रतिक्षणं विद्यमानत्वाद्बहुरूपं चित्तं येषां ते तथा; त एव विभ्रान्तास्तत्त्वावगमाभावाद्विशेषेण भ्रान्ता अनवस्थिताः; यतो मोहस्यैव तमोरूपस्याज्ञानस्य वशंगताः

---

१. BN[1] विधेनाज्ञानेन तत्त्वार्थावबोधा
२. IO वैचित्त्यं This is noted as an alternative reading in BS[2].
३. BN[1] अज्ञानेन
४. IO धरादि
५. IO अतोऽपरानपि BN[1] अपरानपि
६. IO alone adds तथा
७. BS[1] and BN[1] सामर्थ्य
८. BS[1] omits विषयः
९. IO नाचरामि
१०. IO अनेक

तत्पारतन्त्र्यं प्राप्ताः; तैतश्च कामानां शब्दादिसुखानां भोगेऽनुभवे प्रसक्ता अत्यन्तपरत्वरूपेण प्रकर्षेण सक्ता निमग्नचित्ताः ॥

किंचे—

आत्मसंभावितौस्तब्धा धनमानमदान्विताः ।
यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्वकम् ॥ १७ ॥

अहंकारं बलं दर्पं कामं क्रोधं च संश्रिताः ।
मांमात्मपरदेहेषु प्रद्विषन्तोऽभ्यसूयकाः ॥ १८ ॥

ते पूर्वोक्तविशेषणा रजस्तमःप्रधानासुरसर्गभाजो जना यजन्ते नाम; नामशब्दोऽलीकपर्यायः; तेनालीकमेव निष्फलमेव यजन्ते, यागक्रियामनुतिष्ठन्तीत्यर्थः। कुतो निष्फलमेव? यत एवंविधाः सन्तो दम्भेनोक्तलक्षणेन व्याजेन शास्त्रोक्तं विधिं परित्यज्य यजन्ते। किंविधाः सन्तः? आत्मसंभाविताः। आत्मनैव स्वयमेव संभाविता वयमेवंविधगुणविशिष्टा इति गृहीताभिमानाः, न तु गुणदोषविचारनिपुणेन परेण केनचित्संभाविताः; तथा स्तब्धाः प्रणतिविषये प्रह्वत्वरहिताः; यतो धैनात्समुद्गताभ्यां मानमदाभ्यामहङ्कारात्मकाभ्यां युक्ताः। तथाहङ्कारादीन् संश्रिता इति गतार्थम्। तथाविधाः सन्तो मां परमात्मानं

१. BN[1] तथा च
२. BN[1] omits किंच
३. BN[1] भाविनः
४. BS[1] ममात्म is noted as an alternative reading.
५. IO and BN[1] धनसमुत्थाभ्यां
६. IO adds अहङ्कारात्मकाभ्यां
७. IO दीनं श्रिताः
BN[1] दीनाश्रिताः

सर्वगतमज्ञानमोहितत्वादप्रत्ययमर्षेण प्रद्विषन्तोऽप्रीतिहेतुनाध्यवस्यन्तः ; यतोऽभ्यसूयकाः नास्तिकत्वान्निन्दापराः ॥

एवंविधान्—

तानहं द्विषतः क्रूरान् संसारेषु नराधमान् ।
क्षिपाम्यजस्रमशुभानासुरीष्वेव योनिषु ॥ १९ ॥

तान् पुरुषापशदान् क्रूरान् दारुणाचारान्, नास्त्यात्मा नास्तीश्वर इत्यादिना मां द्विषतो मां प्रति अप्रतीतिं चित्तवाक्चेष्टाभिः प्रथयतः सतोऽजस्रं नित्यमेव संसारेषु कर्मभूमिषु तासु तासु दृष्टकर्माधिकारहेतुत्वात् अशुभासु पापात्मिकासु योनिषु गर्भवासेषु क्षिपामि त्यजामि । ते नास्तिकत्वदुष्टसंकल्पाः सन्त एवंविधाः पुनः पुनर्जायन्ते इत्यर्थः ॥

ते च—

आसुरीं योनिमापन्ना नरा जन्मनि जन्मनि ।
मामप्राप्यैव कौन्तेय ततो यान्त्यधमां गतिम् ॥ २० ॥

---

१. IO मोहितत्वात्
२. IO र्षणेन
३. BN[1] हेतुत्वेनाध्यवस्यन्त
IO हेतुनाध्यवसन्तः
४. BN[1] अशुभां
५ IO पुरुषाधमान्. This is an alternative reading in BS[1].
६. IO द्विषन्तः
७. IO अप्रतीतिचित्ताः वाक्
BN[1] अप्रतीतिं दत्तवान् चेष्टाभिः
८. BN[1] omits तासु
९. IO omits अशुभासु
१०. BN[1] न्यस्यामि
११. BN[1] पुनःपुनर्नयत इत्यर्थः

एवंविधा एते[1] जना आसुरीं यथोक्तां योनिं जन्मभूमिं भूयोभूयः प्राप्ताः प्रतिजन्म पूर्वसंस्कारदार्ढ्यान्मूढाः ज्ञानरहिताः सन्तो मां परमात्मानमनधिगम्यैव ततो योनेरन्या[2]मधमां निकृष्टां गतिं यान्ति प्राप्नुवन्ति ॥

कैस्मात्[3] एवंविधास्त्वे[4]मां न प्राप्नुवन्तीत्याह[5]—

त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यज ॥ २१ ॥

आत्मनः परस्य तत्त्वस्य नाशनमदर्शनकारणं येन हेतुभूतेनात्मा नश्यति न दृश्यते, तद् त्रिप्रकारम्; नरकस्य कर्मभूमिफलभेदेन[6] त्रिप्रकारस्य निरयस्येदं द्वारं प्रवेशकर्मकृत्[7] । कामः सुखानुशायी रागलक्षणः क्लेशः । तथा क्रोधो द्वेषलक्षणः । तथा लोभ उत्तरोत्तरं विषयेषु गर्धः[8] । यत एते सर्वे आसुरा जना एतैः कामादिभिर्युक्ताः सन्तो मामपश्यन्त[9] एव दुर्योनिं गच्छन्ति, तस्माद्धेतोः त्वमे[10]तत्त्रयं परिहर, दैवसर्ग[11]सम्भवादेतद्युक्तमात्मानं मा मंस्था[12] इत्यर्थः ॥

---

१. BS[1] omits एते
२. IO omits अन्य.
३. BN[1] तस्मात्
४. IO विधास्ते
५. BN[1] त्रयं इत्याह
६. BN[1] फलभोगेनोभयप्रकारस्य
७. BN[2] omits कर्म
८. BN[1] उत्तरोत्तरेषु विषयेषु रागो यतः
९. BN[1] मामप्रपश्यन्तः
१०. BN[1] त्वयैतत्त्रयं
 IO त्वयैतत्त्रयपरिहारादेवप्रम-संभावितादेवोषु
११. IO and BS[1] omit सर्ग
१२. IO मानमंस्थाः

यस्मात्—

एतैर्वियुक्तः[1] कौन्तेय तमोद्वारैस्त्रिभिर्नरः[2] ।
आचरत्यात्मनः श्रेयस्ततो याति परां गतिम् ॥ २२ ॥

एतैः कामादिभिर्गुणात्मकैः दोषैर्निर्गुणस्वभावेन निसर्गशुद्धेनात्मनात्यन्तासम्बद्धैरज्ञानोपलक्षणतिमिराविर्भावमार्गैस्त्रिभिर्वियुक्तो हेयतया प्रतिपन्नैः सद्भिः पृथग्भूतो[3] नरो मुमुक्षुर्दैवसर्गमारूढः । पुरुषो हि [4]तं यथोक्तं ज्ञानकर्मानुष्ठानरूपमाचरति । ततः परां प्रकृष्टां परमात्मसमापत्तिज्ञानकर्मानुष्ठारूपां गतिं सिद्धिमाप्नोति ; एवंविधस्य च श्रेयसश्चरणं[5] शास्त्रोक्तविधानरूपम् ॥

अतस्तत्परेण भवितव्यमित्याह—

यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः[6] ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ २३ ॥

यः पुरुषः [7]तत्तत्फलनिष्पत्तिहेतुं[8] तत्तत्क्रियादिविषयं शास्त्रेण चोदितं विधिं तत्तदितिकर्तव्यतारूपं विधानमुत्सृज्य[9] तदस्य कामकारतः स्वैच्छन्द्याद्वर्तते[10] व्यवहरते,[11] स [12]नैरन्तर्यक्रियानिष्पत्तिरूपां सिद्धिं[13] लभते । ततश्च तत्फलभूतं[14] सुखं स्वर्गादिमोक्षां निवृत्तिमपि न लभते । न[15] च परां गतिमपवर्गलक्षणां लभते ॥

1. BN' विमुक्तः
2. IO मयैस्त्रिभिर्विमुक्तः
3. IO and BN[1] पृथग्भूतैः
4. IO omits तं
5. BN[1] श्रेयश्चरणं
6. BN[1] चारतः
7. IO omits तत्
8. BN[1] हेतुं
9. IO विधामुत्सृज्य
10. IO adds न स सिद्धिमवाप्नोति
11. IO and BN[1] व्यवहरति
12. IO omits न
13. BN[1] adds फल
14. IO adds न
15. BN[1] omits भूतं
16. IO omits न च...लभते

तस्माच्छास्त्रं प्रमाणं ते कार्याकार्यव्यवस्थितौ ।
ज्ञात्वा शास्त्रविधानोक्तं कर्म कर्तुमिहार्हसि ॥ २४ ॥

तस्मादुक्तात्कारणादिदं कार्यम्, इदं न कार्यमिति व्यवस्थाया शास्त्रमेवैकं ते प्रमाणम् । शास्त्रं[1] हि नाम सदा साक्षात्कृतयथास्थितार्थतत्त्वस्य[3] परमगुरोः परमात्मनः परस्मात्परस्य[4] वचनम् । अतस्तदेवाविसंवादित्वात्[5] प्रमाणं कृत्वा शास्त्रोक्तेन विधानेन चोदितं कर्म त्वमिह कर्मभूमौ कर्तुं स्वजातिविहितं[6] कर्मानुष्ठातुमर्हसि ॥

स्फीतालोका[7] दिनरुचिमिव द्योतयत्याशु दैवीं
घोरां रात्रीमिव मुकुलयत्यासुरीं यश्च दृष्टिम् ।
आत्मादित्यं समुदितमितः षोडशाध्यायशैलात्
दृष्ट्वैव द्रागभवत भविनो मित्रवन्मोहनिद्रा. ॥

इति श्रीराजानकरामविरचिते वाक्यार्थान्वयमात्रे
सर्वतोभद्रनाम्नि भगवद्गीताविवरणे
षोडशोऽध्यायः ॥



---

१. IO ज्ञात्वा
२. BN[1] शास्त्रे
३. IO साक्षात्कृतयथास्थिता
४. IO परस्य तस्य
५. BN[1] and BS[1] संवादकत्वात्
६. BN[1] विहित
७. BN[1] and BS[1] omit from here to the end.

## ॥ अथ सप्तदशोऽध्यायः ॥

सदनेनेदमुक्तमपर्यालोचितसकलशास्त्रपौर्वापर्येण, शास्त्रैकदेशमात्रमाश्रित्य युद्धलक्षणस्वकर्मपरित्यागाय द्वितीये यदुपन्यस्तं त्वया तच्छास्त्राभासत्वादशास्त्रमेव । अतो यथाप्रतिपादितशास्त्रनिश्चयावहितेनै त्वया भवितव्यमिति सिद्धान्ते उक्ते संशयानः अर्जुन उवाच—

ये शास्त्रविधिमुत्सृज्य वर्तन्ते श्रद्धयान्विताः ।
तेषां निष्ठा तु का कृष्ण सत्त्वमाहो रजस्तमः ॥ १ ॥

ये केचित्कर्माणि[3] शास्त्रोक्तं विधिं परित्यज्य श्रद्धया निर्विकल्पफल[4]-संभावनया व्याख्यातलक्षणयान्विताः सन्तो वर्तन्ते क्रियासु व्यवहरन्ति, तेषां का निष्ठा, का सिद्धिः, किं सत्त्वम्, किं सात्त्विकी सिद्धिः[5] तेषामित्यर्थः, आहो-स्विद्रजः राजसी, अथ किं तमस्तामसी ?[2]

अत्रोत्तरं भगवानुवाच—

त्रिविधा भवति श्रद्धा देहिनां सा स्वभावजा ।
सात्त्विकी राजसी चैव तामसी चेति ताः शृणु ॥ २ ॥

---

१. All except BN[1] अवहितत्वेन

२. BN[1]. The colophon that should be read at the last adhyāya is read here.

३. BS[2] कर्मणि

४. IO omits फल

५. BN[1] शुद्धिः

